२१५० । द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । (८-१-१५) द्विशब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु । तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् । इतरे विषयभूताः । द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः । मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेणापि मर्यादीकृत्य । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः द्विवर्गसंबन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं सङ्कर्षणवासुदेवौ । अभिव्यक्तौ साहचर्येणेत्यर्थः । योगविभागादन्यत्रापि द्वन्द्वम् इष्यते ॥

इति द्विरुक्तप्रकरणम् ।

॥ इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्धं समाप्तम् ॥

---

एवं च कृतद्वित्वस्य नपुंसकह्रस्वत्वं च फलितम् ॥ **यथायथं ज्ञातेति** ॥ अत्र ज्ञातेति तृन्नन्तम् । तद्योगे 'न लोक' इति षष्ठीनिषेधात्कर्मणि द्वितीया । तृजन्तत्वे तु यथायथस्य ज्ञातेत्येव ॥ **द्वन्द्वं रहस्य** ॥ **पूर्वपदस्येति** ॥ द्वौ द्वाविति द्वित्वे कर्मधारयवत्त्वात् सुब्लुकि समुदायात् पुनः सुपि पूर्वपदावयवस्य इकारस्य अम् इति मकारान्तादेश इत्यर्थः ॥ **अत्वमिति** ॥ उत्तरपदस्य अकारोऽन्तादेश इत्यर्थः । न च त्यदाद्यत्वमुत्तरपदान्तस्य सिद्धमिति वाच्यम् । संज्ञात्वात्तदप्राप्तेरित्याहुः ॥ **नपुंसकत्वं चेति** ॥ चकारः अनुक्तसमुच्चये । कृतद्वित्वस्य नपुंसकत्वं द्विवचनाभावश्चेत्यर्थः ॥ **आचतुरं हीति** ॥ आङभिविधौ । 'आङ्मर्यादा' इत्यव्ययीभावः । शरत्प्रभृतित्वात् टच् । चतुर्थान्तमिति फलितोऽर्थः । पशवः स्वप्रभृति चतुर्थपर्यन्तं द्वन्द्वं मिथुनीयन्ति इत्यन्वयः । मिथुनशब्देन मैथुनं विवक्षितम् । मिथुनस्य कर्म मैथुनम् । तदिच्छतीत्यर्थे 'सुप आत्मनः' इति क्यच् । फलितमर्थमाह— **मिथुनं गच्छतीति** ॥ मिथुनत्वं प्राप्नोतीत्यर्थः । मिथुनायन्ते इति क्यङ्पाठस्तु प्रामादिकः ॥ **मर्यादीकृत्येति** ॥ स्वप्रभृति चतुरोऽभिव्याप्येत्यर्थः । अत्यन्तसहचरितत्वेन लोकविज्ञानमभिव्यक्तिरिति भाष्याल्लभ्यते । तदाह— **साहचर्येणेत्यर्थ इति** ॥ अत्र द्वन्द्वं न्यञ्चेत्यत्र वीप्सायां द्वित्वम् । अन्यत्र स्वार्थे इति बोध्यम् ॥ **अन्यत्रापीति** ॥ द्वन्द्वानि सहते इत्यादावित्यर्थः । शीतमुष्णं च एकद्वन्द्वम् । सुखं दुःखं चापरम् । क्षुत्तृष्णा चान्यत् । इह स्वार्थे द्वन्द्वः । अम्भावादि पूर्ववत् । 'चार्थे द्वन्द्वः' इति निपातनादन्यत्रापीति सिद्धम् ॥ इति द्विरुक्तप्रकरणम् ॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशारथचक्राकारादिबहुगुणविराजमानप्रौढापरिमितमहाध्वरस्य
श्रीशाहजी शरभजी तुक्कोजी भोसलचोळमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्व-
भौमस्याध्वर्युणा पञ्चपुरुषीपोष्येण बाल्य एव तद्दयानिर्वर्तितापरिमिताभिविजृम्भितवाजपेय-
सर्वपृष्ठाप्तोर्यामप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन पदवाक्यप्रमाणपारावार-
पारीणाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन अध्वरमीमांसाकु-
तूहलवृत्तिनिर्माणप्रकटितसर्वतन्त्रस्वातन्त्र्येण बोधायनापस्तम्बसत्या-
षाढभारद्वाजकात्यायनाश्वलायनद्राह्यायणादिकल्पसूत्रतद्भाष्य-
पारीणमहादेववाजपेययाजिसुतेन अन्नपूर्णाम्बागर्भजा-
तेन वासुदेवदीक्षितविदुषा विरचितायां सिद्धा-
न्तकौमुदीव्याख्यायां बालमनोरमायां
॥ पूर्वार्धम् सम्पूर्णम् ॥

# ॥ अकाराद्यनुक्रमेण कौमुदीपूर्वार्धगतसूत्रसूचिका ॥

# ॥ अकाराद्यनुक्रमेण कौमुदीपूर्वार्धगतवार्तिकसूचिका ॥

## ॥ कौमुदीपूर्वार्धगतपरिभाषासूचिका ॥

*



आदनूर् . ब्रह्मश्री. पण्डित. शं . चन्द्रशेखरशास्त्री.

Founder of 'The Sri Balamanorama Series'